Checked 2014

कविकुलगुरु कालिदास संस्कृत विश्वविद्यालय, रामटेक
हस्तलिखित संग्रह

दाखल क्र M 290 विषय काव्य

नाव. किरातार्जुनीयम् (द्वितीयसर्ग) मुद्रित

लेखक/लिपीकार भारवी

पृष्ठ 82 काळ शके 1783 पूर्ण/अपूर्ण

अथकिरातार्जुनीयेकाव्येद्वितीयसर्गप्रारंभः श्रीः

श्रीगणेशायनमः विहितामिति अथवृकोदरोभीमः प्रियया द्रौपद्या प्रियाग्रहणं अस्याहितोपदेशस्तवनार्थं विहितामभि
हितामित्यर्थः विपूर्वस्यदधातेः क्रियासामान्यवाचिनोयोगविशेषपर्यवसानात् मनःप्रियामभिहितार्थप्रयोगान्मनोहरां



विहितांप्रिययामनःप्रियामथनिश्चित्यगिरंगरीयसीं
उपपत्तिमदूर्जिताश्रयंनृपमूचेवचनंवृकोदरः १

विशेषणद्वयेनापिगिरोग्राह्यत्वमुक्तं गिरंगरीयसींसारवत्तरांनिश्चित्य नृपंधर्मराजं उपपत्तिमत्युक्तियुक्तं ऊर्जिताश्रयमु १
दारार्थं वचनमूचेउक्तवान् कर्तरिलिट् ब्रुवोवचिरादेशः ब्रुविशासीत्यादिनाद्विकर्मकत्वं अकथितंचेतिनृपस्यकर्मत्वं १

किंतद्वचनंतदाह यदिति मानिनीक्षत्रियकुलाभिमानवतीद्रौपदीस्नेहमयेनस्नेहप्रचुरेण तत्प्रकृतवचनेमयट् चक्षुषाज्ञानचक्षुषा एतेनासत्वमुक्तं परितोवीक्ष्य समंतात्दृष्ट्वायद्वचनमवोचत् ब्रुवोवचेर्वालुङ् वचउमितिउमागमः वागाधिपस्यबृहस्पतेरपिदुर्वचंवक्तुमशक्यं शेषेषष्ठीयंनक्तद्योगलक्षणा अतोनलोकेत्यादिनाषष्ठीनिषेधोनास्ति

यदवोचदवेक्ष्यमानिनीपरितःस्नेहमयेनचक्षुषा अ
पिवागधिपस्यदुर्वचंवचनंतद्विदधीतविस्मयम् २

तद्वचनंविस्मयंविदधीतप्रकुर्वीत सर्वस्यापीतिशेषः अथवावागधिपस्यापिविस्मयंविदधीतेतिसंबंधः दुर्वचंकेनापीतिशेषः यत्नेनापिशक्यं अनुरुणद्धिहितंचानुबध्नाति अतोविस्मयकरं ग्राह्यंनैनतद्वचनभिनिताप्तर्यार्थः २ ॐ ॐ ॐ ॐ

विस्मयकरत्वेहेतुमाह विषमइति विषमोपि दुर्बोधोपि अन्यत्रदुःप्रवेशोपिनयोनीतिशास्त्रं पयसामाशयोह्रदइव
कृततीर्थः कृताभ्यासाद्युपायः सन् तीर्थंशास्त्रेध्वरेक्षेत्रोपायोपाध्यायमंत्रिष्विति वैजयंती अन्यत्रकृतजलावता
रःसन् तीर्थंयोनौ जलावतारेचेतिहलायुधः विगाह्यतेविगाह्यतेप्रविश्यतेच किंतुतत्रनयेसतादृशः पुरुषः विशे

विषमोपिविगाह्यतेनयः कृततीर्थः पयसामिवाशयः
सतुतत्रविशेषदुर्लभः सदुपन्यस्यतिकृत्यवर्त्मयः ३

षदुर्लभः यः कृत्यंसंधिविग्रहादिकार्यंस्थानादिकंच तस्यवर्त्मसत्साधु देशकालाद्यविरुद्धंयथार्थमित्यर्थः अन्यत्रचस-
त् गर्तग्राहपाषाणादिरहितं उपन्यस्यतिउदाहरति उपन्यासस्तुवाङ्मुखं उपोद्घातउदाहारमित्यमरः यथाकेचित्कृत
तीर्थेपयसिगंभीरेपिप्रवेष्टारः संति तीर्थकरस्तुविरलः तद्वन्नीतावपिनिगूढमपितत्वंसातिवक्तारिबोद्धारः संति
वक्तातुनसुलभः इयमपठितासाधुवक्तीतियुज्यतेविस्मयइतितात्पर्यार्थः ३ ७



२

अथग्राह्यत्वेहेतुमाह परिणामेति परिणामःफलकालःपरिपाकावस्थाच तत्रस्रुरवेहिते शस्तंचाथत्रिषुद्रव्येपापंपुण्यंसु-
रवादिचेत्यमरः स्रुरवशब्दस्यविशेष्यलिंगत्वं गरीयसिगुर्वर्थप्रतिपादके अर्थभूयिष्ठेश्रेष्ठेच क्षतौजसांउभयत्रापि-

परिणामस्रुरवेगरीयसिव्यथकेस्मिन्वचसिक्षतौजसां
अतिवीर्यवतीवभेषजेबहुरल्पीयसिदृश्यतेगुणः ४

क्षीणशक्तीनां व्यथकेयुद्धोपोद्बलकत्वाद्भयंकरे अन्यत्रादौसंतापादिदुःखजनके अल्पीयस्यल्पाक्षरे अल्पमात्रेच उक्तंच
स्वल्पाचमात्राबहुलोगुणश्चेति अस्मिन्वचस्यतिवीर्यवत्यत्यंतसामर्थ्यवतिभेषजेऔषधेइव भेषजौषधभैषज्यंइत्यमरः
बहुरधिकोगुणःमानत्राणराज्यलाभादिरारोग्यबलसिद्धिश्चदृश्यते अतोग्राह्यमस्यावचनमितिभावः ४ ७

सत्यमेवमस्त्विदंनरोचतेकिंकरोमीत्यतआह इयमिति रुचिरार्थाहितार्थसंपन्नेतिरुचिरत्वेहेतूक्तिः इयं भारतीद्रौपदी-
वाक्यं इष्टगुणायअभिमतगुणायगुणग्राहिणेइत्यर्थः भवतेतुभ्यं रुच्यर्थानांप्रीयमाणइतिसंप्रदानाच्चतुर्थी रोचतां-

इयमिष्टगुणायरोचतांरुचिरार्थाभवतेपिभारती ननु
वक्तृविशेषनिःस्पृहागुणगृह्यावचनेविपश्चितः ५

प्रियतांस्वदतां विध्यर्थेलोट् हितवचनेबलादपीच्छांकुर्यादौषधवदितिभावः तथापिस्त्रैणेवचसिकाश्रद्धातत्राह नन्विति
गुणानांगृह्यागुणगृह्याःगुणपक्षपातिनइत्यर्थः पदास्वैरिबाह्यापक्षेषुचेतिग्रहेःक्यप् विपश्चितोविद्वांसः विद्वान्विपश्चि ३
द्दोषज्ञइत्यमरः वचनेविषये वक्तृविशेषेस्त्रीपुंसादिलक्षणे निःस्पृहाः ननुनिरास्थाःखलु बालादपिसुभाषितंग्राह्यमितिभावः५

संप्रतिस्वयमुपालभते ॥ चतसृष्विति हेनृप चतसृष्वपि विद्यासु आन्वीक्षिक्यादिषु आन्वीक्षिकीत्रयीवार्तादंडनीतिश्चशा
श्वती विद्याह्येतास्चतस्रस्तुलोकसंस्थितिहेतवइतिकामंदकः निरूढिमागताप्रसिद्धिंगता अतएवविवेकिनीसदसद्विवेक
वती यथाहमनुः आन्वीक्षिक्यांतुविज्ञानंधर्माधर्मौत्रयीस्थितौ अर्थानर्थौचवार्तायांदंडनीत्यांनयानयाविति तेमतिः कथंक
रिणी पंकमिव विपर्ययंवैपरीत्यं अविवेकरूपत्वमेत्य अवसीदतिनश्यतिएतन्नयुक्तमितिभावः ६ किन्नश्छिन्नमिदा

चतसृष्वपितेविवेकिनीनृपविद्यासुनिरूढिमागता कथमेत्यमतिर्विपर्ययंकरिणीपंकमिवावसीदति ॥ ६ ॥
विधुरंकिमतःपरंपरैरवगीतांगमितेदशामिमाम् अवसीदतियत्सुरैरपित्वयिसंभावितवृत्तिपौरुषं ॥ ७ ॥

नींयेनत्वमुपालभ्यसइत्यत्राह विधुरमिति त्वयि परैःशत्रुभिः इमामीदृशीं अवगीतांगर्हितां अवगीतंचनिर्वादेमुहुर्दृष्टेचगर्हि
तेइतिविश्वः दशांगमितेप्रापितेसति सुरैरपिसंभावितवृत्तिबहुकृतमसारं अथवानिश्चितसद्भावं पौरुषंपुरुषकारः युवा
दित्वादण्प्रत्ययः अवसीदतिनश्यति इतियत् अतःपरं अतोन्यत् अधिकंकिंविधुरंकिंकष्टं नकिंचिदित्यर्थः विधुरंप्रत्य
वायेस्यात् कष्टविश्लेषयोरपीतिवैजयंती अस्तीतिशेषः अस्तिर्भवतीपरःप्रथमःपुरुषोऽप्रयुज्यमानोप्यस्तीतिभाष्यकारः
भवंतीतिलटःपूर्वाचार्याणांसंज्ञा यत्पुरुषाधिकस्यदुर्दशासाचशत्रुकृताइतिमहत्कष्टं तच्चत्वयोपेक्ष्यतइत्युपालभ्यतइत्यर्थः ७

अथोपेक्षाकालत्वादियमुपेक्षेत्याशंक्य नायमुपेक्षाकालइतिवक्तुंतदेवतावत् श्लोकद्वयेनविविनक्ति द्विषतामिति भूतिमु
दयमिच्छताशोभनामेधायस्यतेनसुमेधसासुधिया नित्यमसिच्‌प्रजामेधयोरित्यसिच्‌प्रत्ययः गुरुर्महानपि अत्यंतत
रः अत्यंतदुरंतःक्षयोन्मुखइत्यर्थः द्विषतामुदयःवृद्धिःसुमर्षणःसुखेनमृष्यतइतिसुमर्षणःसुसहःउपेक्ष्यइत्यर्थः

द्विषतामुदयःसुमेधसागुरुरत्यंततरःसुमर्षणः –
नमहानपिभूतिमिच्छताफलसंपत्प्रवणःपरिक्षयः॥८

त्यंतस्त्वदुर्मर्षणइतिभावः भाषायांशासीत्यादिनाखलर्थेयुच्‌ महानपि फलसंपत्प्रवणः फलसिध्युन्मुखः प्रतिरंतरि
त्यादिनाणत्वं परिक्षयोनसुमर्षणः नोपेक्ष्यइत्यर्थः अन्यथात्तूपेक्ष्यइतिभावः नत्वुदयएवप्रतिकार्यः नचक्षयएवो ४
पेक्ष्यइत्यर्थः किंतुस्वंतत्वास्वंतत्वाभ्यांउभावपिप्रतिकार्यौउपेक्ष्यौचभवतइत्यर्थः ८ ॐ ॐ

अथोभयोरपिमध्येएकतरस्योदयक्षययोर्गतिमुक्त्वाइदानींयुगपत्परिक्षयागमेगतिमाह अचिरेणेति कृतमनेनेतिकृतीकु
शलइत्यर्थः इष्टादिभ्यश्चेतिइनिप्रत्ययः परस्यशत्रोःक्षययुक्तिंक्षययोगं अचिरेणाशुभाविनीं भूयसींदुरंतांच तथा
आत्मनःक्षययुक्तिंविपरीतांचिरभाविनीं अल्पीयसींस्वंतांचविगणय्यविचार्यल्पपिलघुपूर्वादित्ययादेशः उपेक्षते अ
न्यथाउक्तवैपरीत्येपरस्यक्षययुक्तौ अल्पीयस्यांस्वस्यभूयस्यामित्यर्थः तत्प्रतिकारंतस्याःक्षययुक्तेःप्रतिकारं अचि

अचिरेणपरस्यभूयसींविपरीतांविगणय्यचात्मनः क्षययुक्तिमुपेक्षतेकृतीकुरुतेतत्प्रतिकारमन्यथा ९
अनुपालयतामुदेष्यतींप्रभुशक्तिंद्विषतामनीहया अपयांत्यचिरान्महीभुजांजननिर्वादभयादिवश्रियः
१०

रेणाशुकुरुते एवंचसतियदाशत्रोरभ्युदयःस्वस्यचातिपरिक्षयोयथास्माकंतदाकिंवक्तव्यमित्यर्थः सद्यःप्रतिकारंकुरुते
इत्यर्थात्सिद्धमनुसंधेयं ९ तथाप्युपेक्षायामनिष्टमाचष्टे अनुपालयतामिति उदेष्यतींवर्धिष्यमाणां आच्छीनद्योर्नुमितिविक
ल्पान्नुमभावः द्विषतां प्रभुशक्तिं कोशदंडजंतेजः सप्रभावःप्रतापश्चयत्तेजःकोशदंडजमित्यमरः अनीहया अनुत्साहे
न अनुपालयतांउपेक्ष्यमाणानांमहीभुजांश्रियः संपदोजननिर्वादभयात्निकृष्टपुरुषानुरागात्लोकापवादभयादितिहेतूत्प्रे-
क्षा अचिरादपयांति अपसरंति यथाहकामंदकः स्त्रीभिःषंढइवश्रीभिरलसःपरिभूयतइति अतःपराक्रमितव्यमितिभावः
१०

द्वि॰स॰टी॰ ननुपदधतंणः कथंप्रबलेनाभियुज्यतेइत्यत्राह क्षयेति क्षययुक्तमपितथाक्षीणमपिसंतंस्वभावजंशिवंसर्वलोकाल्हादकं - सर्ग

५ धामक्षात्रंतेजः प्रकाशंचदधतं समृद्धयेऐश्वर्यार्थं उत्थितमुद्युक्तं उत्साह मानमितियावत् अन्यत्रउत्थितमुदितं अतएव अ २

क्षययुक्तमपिस्वभावजंदधतंधामशिवंसमृद्धये
प्रणमंत्यनपायमुत्थितंप्रतिपच्चंद्रमिवप्रजानृपं ११

नपायमविनाशिनंवर्द्धिष्णुमित्यर्थः नृपंप्रजाःप्रतिपच्चंद्रंद्वितीयाचंद्रमिवेत्यर्थः प्रतिपच्छब्देनद्वितीयाग्रहणप्रतिपादितस्या

दृश्यत्वादिति प्रणमंतिप्रह्वीभावेनवर्त्ततइतिभावः चंद्रंतुनमस्कुर्वंति क्षीणस्याप्युत्साहः कार्यसिद्धेर्निदानमित्यर्थः ५

श्रियंहिसततोत्साहीदुर्बलोपिसमश्नुतेइतिकामंदकः ११ ❀ ❀ ❀

ननुप्रभुशक्तिशून्यस्योत्साहः कुत्रोपयुज्यतइत्यत्राह प्रभवइति कर्मणामारंभोपायाः पुरुषद्रव्यसंपत् देशकालविभागः विनिपातप्रतीकारः कार्यसिद्धिश्चेतिपंचांगानि यथाहकामंदकः सहायाःसाधनोपायाविभागोदेशकालयोः विनिपातप्रतीकारःसिद्धिःपंचांगमिष्यतेइतिपंचानामंगानांविनिर्णयः तद्धितार्थेत्यादिनाउत्तरपदसमासः कृतःपंचांगविनिर्णयोयस्य सतथोक्तः नयोनीतिशास्त्रमितियावत् कोशोऽर्थराशिः कोशोऽस्त्रीकुड्मलेखड्गपिधानेर्थौघदिव्ययोरित्यमरः दंडश्चतुरंगसैन्यं

प्रभवःखलुकोशदंडयोःकृतपंचांगविनिर्णयोनयः
सविधेयपदेषुदक्षतांनियतिंलोकइवानुरुध्यते १२

रंगसैन्यं दंडोऽस्त्रीशासनेसंज्ञांहिंसायांलगुडेयमे यात्राज्ञायांसैन्यभेदेइतिवैजयंती तयोःकोशदंडयोःप्रभुशक्तेरित्यर्थः प्रभवत्यस्मादितिप्रभवः कारणंऋदोरप् सनयःनीतिशास्त्रं विधेयपदेषुकार्यवस्तुषुपदंव्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुष्वित्यमरः दक्षतांक्षिप्रकारित्वमुत्साहंइत्यर्थः लोकः कृष्यादिप्रवृत्तोजनः नियतिंदैवमिव नियतिर्नियमेदैवेइतिविश्वः अनुरुध्यतेअनुसरति रुधेर्दैवादिकात्कर्तरिलट् मंत्रस्यापिमूलमुत्साहस्तन्मूलायाःप्रभुशक्तेःमूलमिति किमु वक्तव्यं अतःसएवाश्रयणीयः यतोनक्तंदिवंमंत्रयतः तस्यापिप्रभोर्निरुत्साहस्यनकिंचित्सिध्यतीतिभावः १२

अथयदिदैवात्त्वयमेवदुर्योधनः संपदोदास्यतितथापितत्कथंरोचतेतनहीत्याह द्विषतेति अथवाद्विषतादुर्योधनेनविहितंसम
र्पितमित्यर्थः आत्मनःपदंराज्यं पुनरपित्वयालब्धालप्स्यतेयदि लभेःकर्मणिलुट् हेजननाथ तवानुजन्मनांअनुजानां आवि
ष्कृतपौरुषैःप्रकटितपराक्रमैः भुजैःकृतमलंव्यर्थमितियावत् अस्मद्भुजैर्नकिंचित्साध्यंइत्यर्थः राज्यदानादानयोःद्विषता

द्विषताविहितंत्वयाथवायदिलब्धापुनरात्मनःपदं
जननाथतवानुजन्मनांकृतमाविष्कृतपौरुषैर्भुजैः १३

मेवस्वातंत्र्ये अस्मद्भुजनैष्फल्यात्क्षत्रियस्यविजितमितिशास्त्रात्क्षात्रेणैवराज्यंग्राह्यमितिभावः कृतमितिप्रतिषेधार्थ-
मव्ययंचादिषुपठ्यते कृतमितिनिवारणनिषेधयोरिति गम्यमानसाधनक्रियापेक्षयाकरणत्वात्तृतीया उक्तंच न्यासो-
द्योतेनकेवलंश्रूयमाणैवक्रियानिमित्तंकारकभावस्यापितुगम्यमानापीति १३ ❀ ❀

ननुसोत्साहस्यासहायस्यकथमर्थसिद्धिरित्यतआह अभिमानवतइति अभिमानवतःमानधनस्य प्रियमिष्टं उच्चैरु
न्नतं पदंस्थानंराज्यादिकंआरुरुक्षतः आरोढुमिच्छतःप्राप्तुकामस्यमनस्विनोधीरस्यात्मपौरुषंस्वपुरुषकारएवविनिपा
तनिवर्तनक्षमं अनर्थप्रतिकारसमर्थं आलंबनंसहकारि मतंइष्टं यथाकस्यचित्तुरंगमारोढुतः किंचित्सतनप्रतिबंधका
नुचरहस्तादिकमालंबनं तद्वदितिध्वनिः किंपौरुषादन्यैःसहायैःशूराणामितिभावः १४ पौरुषानंगीकारेदोषमाह विप

अभिमानवतोमनस्विनःप्रियमुच्चैःपदमारुरुक्षतः विनिपातनिवर्त्तनक्षमंमतमालंबनमात्मपौरुषं १४
विपदोभिभवंत्यविक्रमंरहयत्यापदुपेतमायतिः नियताल्लघुतानिरायतेरगरीयान्नपदंनृपश्रियः १५

दइति अविक्रमंपौरुषहीनं विपदोऽभिभवंतितिरस्कुर्वंति आपदुपेतंविपन्नं आयातिःउत्तरकालः उत्तरःकालआयतिरित्य
मरः रहयतित्यजति निरायतेरासन्नक्षयस्येत्यर्थः लघुतागौरवं नियताअवश्यंभाविनी नकश्चिदेनमाद्रीयतइत्यर्थः अग
रीयान् लघीयान् नृपश्रियःपदं राज्यलक्ष्म्याःआस्पदं नभवति यद्वा नृपेतिपदच्छेदः तस्मात्पौरुषंकर्तव्यमेवेत्यर्थः अत्रपू
र्वस्याविक्रमत्वादेरुत्तरोत्तरंविपदादिकंप्रतिकारणत्वात्कारणमालाख्योलंकारः तथाचसूत्रं पूर्वपूर्वस्योत्तरोत्तरहेतुत्वेकारणमालेति

फलितमाह तदिति तत्तस्मादुपेक्षायांदोषसंभवादित्यर्थः उन्नतेरभ्युदयस्य प्रतिपक्षमंतरायंव्यवसायवध्यतां उद्योगशू-
न्यतामवलंब्य अलंउद्योगशून्यतावलंबनेनालमित्यर्थः अलंखल्वोः प्रतिषेधयोः प्राचांक्त्वेतिक्त्वाप्रत्ययः तस्यल्यबादेशः
तथाहिपराक्रमः आश्रयः कारणंयासांताः तथोक्ताः समृद्धयः संपदः विषादेनसमं अनुत्साहेनसहनानिवसंतिपौरुषेय
साध्याः संपदोनात्वनुद्योगसाध्याउभयोः सहावस्थानविरोधादित्यर्थः वैधर्म्येणकार्यकारणरूपोऽर्थांतरन्यासः १६ ननु

तदलंप्रतिपक्षमुन्नतेरवलंब्यव्यवसायवध्यतां निवसंतिपराक्रमाश्रयानविषादेनसमंसमृद्धयः १६
अथचेदवधिःप्रतीक्ष्यतेकथमाविष्कृतजिह्मवृत्तिना धृतराष्ट्रसुतेनसुत्यजाश्चिरमास्वाद्यनरेंद्रसंपदः १७

समयः प्रतीक्ष्यतेकिंवेगेनइत्यत्राह अथेति अथावधिः कालः प्रतीक्ष्यतेचेत् अवधिस्त्ववसानेस्यात्सीम्निकालेबलेपिचे
तिविश्वः आविष्कृतजिह्मवृत्तिनाप्रकटितकपटव्यवहारेण धृतराष्ट्रसुतेनदुर्योधनेन नरेंद्रसंपदोराज्यसंपदः नरेंद्रेति-
वापदच्छेदः चिरंचतुर्दशवर्षाण्यास्वाद्यानुभूय कथंसुत्यजाः ज्ञातस्वादेनतेनपश्चादपिसंपदोयुद्धक्लेशंविनानत्यक्ष्यं- ७
तएवेत्यवधिप्रतीक्षणंव्यर्थमित्यर्थः १७ ॐ ॐ ॐ

नन्तुसाम्नैवकार्यसिद्धौकिंक्षात्रेण यथाहमनुः साम्नादानेनभेदेनसमस्तैरथवापृथक् विजेतुंप्रयतेतारीन्नयुद्धेनकदाचने-
तितत्किमाग्रहेणेत्याह मदेति मृगाधिपःसिंहोमदसिक्तसुखैः मदवर्षिभिरित्यर्थः स्वयंस्वेनैवहतैःकरिभिर्वर्तयतेवृत्तिं
करोति तैरेवजीवतीत्यर्थः चौरादिकात्वृत्तेर्णिच् भौवादिकस्यतु अणावकर्मकाच्चित्तवत्कर्तृकादिति परस्मैपद-

मदसिक्तसुखैर्मृगाधिपःकरिभिर्वर्तयतेस्वयंहतैः
लघयन्खलुतेजसाजगन्नमहानिच्छतिभूतिमन्यतः १८

नियमादिति तथाहि तेजसाप्रभावेणतेजोबलेप्रभावेच ज्योतिष्यर्चिषिरेतसीतिवैजयंती जगत्लघयन् लघुकुर्वन्
महानन्यतोन्यस्मात्पुरुषात् भूतिंवृद्धिं नेच्छतिखलु नहितेजस्विनःपरायत्तवृत्तित्वंयुक्तंमनुवचनंतु असमर्थविषय
मितिभावः विशेषेणवक्ष्यमाणसामान्यसमर्थनरूपोऽर्थांतरन्यासः १८ ७ ७

किरा०टी॰ ८

ननुयुद्धात्पाक्षिकोलक्ष्मीलाभः उपायांतरैस्तुनतथेत्याशंक्याह अभिमानेनेति अभिमानधनस्यवैरिनिर्यातनमेवधनं सर्ग २
यस्येत्यर्थः अतएवगत्वरैःगमनशीलैःअस्थिरैःगत्वरश्चेतिक्वरबंतंनिपातनं असुभिःप्राणैःकरणैःपुंसिभूम्न्यसवः
प्राणाइत्यमरः स्थास्नुस्थिरं यशश्चिचीषतः चेतुंसंग्रहीतुमिच्छतः ग्लाजिस्थश्चक्स्नुरितिस्नुप्रत्ययः चिनो-

अभिमानधनस्यगत्वरैरसुभिःस्थास्नुयशश्चिचीषतः
अचिरांशुविलासचंचलाननुलक्ष्मीःफलमानुषंगिकं १९

तेःसन्नंतात्शतृप्रत्ययः अचिरंअंशवोयस्याःसाअचिरांशुर्विद्युत्तस्याःविलासःस्फुरणंतद्वच्चंचलाक्षिणिकेत्यर्थः
लक्ष्मीःसंपत् अनुषंगाद्दागतंआनुषिकं अन्वाचयशिष्टंफलं मानत्राणजंयशएवमुख्यंफलं अभ्युच्चयस्तुलक्ष्मी
रितिमानिनांमानएवश्लाघ्यइत्यर्थः अत्रास्थिरप्राणत्यागेनस्थिरयशःस्वीकाराभिधानात्न्यूनाधिकविनिमया- ८
रव्यःपरिवृत्त्यलंकारः उक्तंचकाव्यप्रकाशे परिवृत्तिर्विनिमयोयोर्थानांस्यात्समासमैरिति १९ छ

नन्वल्पस्यमानस्यहेतोः कथंप्राणत्यागःशक्यतेकर्तुंयतोजीवन्नरोभद्रशतानिपश्यतीत्याशंक्याह ज्वलितमिति जनोभस्म
नांचय मास्कंदतिपादादिनाआक्रमति अदाहकत्वादितिभावः ज्वलितंज्वलंतंकर्तरिक्तः मतिबुद्धीत्यादिसूत्रेचकाराद्व
र्तमानार्थत्वं हिरण्यंरेतोयस्यतंहिरण्यरेतसंअग्निंन आस्कंदति दाहकत्वादितिभावः अतोहेतोर्मानिनः अभिभूतिभ
यात्प्राणलोभेनतेजस्त्यागेपरिभवोभविष्यतीतिभयादसूनेवसुखंसक्लिष्टं उज्झंतित्यजंति धामतेजस्तुनोज्झंति मा

ज्वलितंनहिरण्यरेतसंचयमास्कंदतिभस्मनांजनः अभिभूतिभयादसूनतःसुखमुज्झंतिनधाममानिनः२०
किमपेक्ष्यफलंपयोधरान्ध्वनतःप्रार्थयतेमृगाधिपः प्रकृतिःखलुसामहीयसःसहतेनान्यसमुन्नतिंयया २१

नहाभिकराज्जीवनात्स्वतेजसामरणमेववरमित्यर्थः पूर्वश्लोकवत्अर्थांतरन्यासः २०अथवाकिमत्रप्रयोजनंचिंतया कि-
तुतेजस्विनामेवायंस्वभावोयज्जिगीषुत्वमित्याह किमिति मृगाधिपःसिंहः किंफलंप्रयोजनं अपेक्ष्य ध्वनतोगर्जतः ध
रंतीतिधराः पचाद्यच् पयसोधरान्पयोधरान् मेघान्प्रार्थयते अभियाति याच्ञायामभियानेचप्रार्थनाकथ्यतेबुधैरितिके
शवः अथवाऽवरुणद्धीत्यर्थः प्रार्थयतइति अभियाञ्चावरोधयोरित्यभिधानात् तथाहि महीयसोमहत्तरस्य साप्र-
कृतिः खलु यया प्रकृत्या अन्यसमुन्नतिंपरवृद्धिंनसहते महतांपरभंजनमेवपुरुषार्थइत्यर्थः पूर्ववदलंकारः २१ ७

संप्रतिउक्तप्रयोजनंनिगमयति कुरुतदिति हेनृप तत्तस्मात् उक्तरीत्यापराक्रमावसरत्वाद्धेतोः यत्तद्यतस्ततोहेतावित्यमरः
प्रमादजं तमोमोहं निर्धूयनिरस्य विक्रमे पौरुषेएव मतिंकुरु विक्रममेवांगीकुरु नतूपायांतरमित्यर्थः नन्वविक्रमेवैकल्य
मित्याह ध्रुवमिति विद्विषांविपत्तयस्त्वदनुत्साहहताः तवानुत्साहेनाव्यवसायेनहताः प्रतिबद्धाः अन्यथाप्रागेवविपद्येर
न्नितिभावः इत्येतद्ध्रुवंनिश्चितं अवेहिविद्धि ध्रुवंनित्येनिश्चितेचेतिशाश्वतः २२ नचनःपराजयशंकाकार्येत्याह द्वि

कुरुतन्मतिमेवविक्रमेनृपनिर्धूयतमःप्रमादजं ध्रुवमेतदवेहिविद्विषांत्वदनुत्साहहताविपत्तयः २२
द्विरदानिवदिग्विभावितांश्चतुरस्तोयनिधीनिवायतः प्रसहेतरणेतवानुजान्द्विषतांकःशतमन्युतेजसः २३

रदानिति दिग्विभावितान्दिक्षुप्रसिद्धान् तानायतःआगच्छतः आङ्पूर्वादिणधातोःशतृप्रत्ययः चतुरोद्विरदान्दिग्ग
जानिवतथोक्तविशेषणान् चतुरस्तोयनिधीनिवरणे आयतःदिक्विभावितान् शतमन्युतेजसः इंद्रविक्रमान् च
तुरस्तवानुजान् द्विषतांमध्येकः प्रसहेनसोढुंशक्नुयादित्यर्थः शकिलिङ्चेतिशक्यार्थेलिङ् अतोनिःशंकंप्र
वर्तस्वेतिभावः २३ ९ ९ ९ ९

आशीर्वादव्याजेनफलितमाह ज्वलतइति तवचेतसि सततंनिरंतरं ज्वलनोवैरिकृतस्यजातवेदसः क्रोधाग्नेरित्यर्थः शिवे
तरा अशिवाइत्यर्थः अमंगलावैधव्यदुःखजनकत्वादितिभावः रिपुनारीनयनांबुसंततिः वैरिवनिताश्रुप्रवाहः शर्मंवि
दधातु वैरिकृतस्यास्यवैरिवधमंतरेणशांत्यसंभवादवश्यंतद्वधस्त्वयाकर्तव्यइत्यर्थः क्रोधस्यविषयस्यनिगरणेनवि

ज्वलतस्तवजातवेदसःसततंवैरिकृतस्यचेतसि
विदधातुशर्मंशिवेतरारिपुनारीनयनांबुसंततिः२४

षयिणोजातवेदसएवोपनिबंधनादतिशयोक्तिरलंकारः तदुक्तं विषयस्यानुपादानात् विषय्युपनिबध्यते यत्रसातिशयो
क्तिःस्यात्कवेःप्रौढोक्तिर्जीवितेति तत्रापिक्रोधस्यजातवेदसोभेदेप्यभेदाध्यवसायात् भेदेऽभेदरूपा ततएवांबुनिर्वा-
प्यत्वोक्तिस्संघटते तथाच यथांबुसेकेनाग्निःसम्यक्शाम्यति तथाशत्रुवधेनक्रोधइत्यौपम्यंगम्यते २४ ७

एवंभीमेनिसंरब्धेयुधिष्ठिरःउपसांत्वयन्नाह इतीति इत्युक्तरीत्या दर्शिताविक्रियाकोपविकारोवागारंभात्मकोयेनतंकोप
परीतमानसंकोपाक्रांतचित्तं इदंविशेषणद्वयंद्विरदेपियोज्यं मरुतःसुतंभीमं महीपतिर्युधिष्ठिरोदुष्टंद्विरदमिव एने-

इतिदर्शितविक्रियंसुतंमरुतःकोपपरीतमानसं
उपसांत्वयितुंमहीपतिर्द्विरदंदुष्टमिवोपचक्रमे २५

नास्यशौर्यमेवनबुद्धिरस्ति इतिगम्यते उपसांत्वयितुं अनुनेतुमुपचक्रमेप्रवृत्तः प्रोपाभ्यांसमर्थाभ्यामित्यात्मनेपदं राज्ञा
भाव्युपकारविशेषापेक्षयाकथंचिदवश्ययोजनः शनैः द्विरदवद्वशीकरणीयोनतुत्याज्यइतिभावः २५ छ

प्रथमंतावत्स्तुत्यादिभिः प्रसादयति अपवर्जितेति विप्लवःप्रमाणबाधः अन्यत्रबाह्यमलसंक्रमः सोपवर्जितोयस्यतस्मि-न्नपवर्जितविप्लवे शुच्यौशुचिः शब्दसौष्ठवंलोहशुद्धिस्वतद्वति अतएवहृदयग्राहिणिमनोरमे मंगलास्पदेएकत्रहिता र्थप्रतिपादकत्वादन्यत्रमंगलवस्तुत्वाच्चश्रेयस्करेरोचनंचंदनंहेममृदंगंदर्पणंमणिं गुरुमग्निंतथासूर्यंप्रातःपश्येत्सदाबुध

अपवर्जितविप्लवेशुचौहृदयग्राहिणिमंगलास्पदे
विमलानववविस्तरेगिरांमतिरादर्शइवाभिदृश्यते २६

इतिपुराणवचनात् तववगिरांविस्तरेवाक्यप्रपंचेप्रथनेवावशब्दइतिघञ्प्रतिषेधात् ऋदोरबित्यप् अतएवविस्तारोविग्र होव्यासःसतुशब्दस्यविस्तरइत्यमरः मतिस्तुबुद्धिरादर्शेदर्पणइव दर्पणेमुकुरादर्शावित्यमरः विमलाविशदा अभि-दृश्यतेवाग्वैशद्यादेवमतिवैशद्यमनुमीयते तत्पूर्वकत्वात्तस्येत्यर्थः २६ छ छ

अथयुग्मेनाह स्फुटतेति उपपत्तिरितिच पदैःसुप्तिङंतशब्दैः स्फुटताविशदार्थता अनपाकृतानत्यक्ता अर्थगौरवं अर्थभू-
यस्त्वंवानचनस्वीकृतंस्वीकृतमेवेत्यर्थः वैशद्यप्रसक्तार्थगौरवाभावनिवर्तनार्थंनञ्द्वयंसंभाव्यनिषेधनिवर्तनेद्वौप्रतिषेधा
वितिवामनः गिरांपदानां अवांतरवाक्यानांच पृथगर्थताभिन्नार्थताअपुनरुक्तार्थतेतियावत् रचिताकृता यथाक्वचिदपि
सामर्थ्यंगिरांअन्योन्यसामर्थ्यंसाकांक्षत्वन्नापोहितन्नवर्जितं नत्यक्तं अन्यथादशदाडिमादिशब्दवदेकवाक्यतानस्यात्

स्फुटतानपदैरपाकृतानचनस्वीकृतमर्थगौरवम्
रचितापृथगर्थतागिरान्नचसामर्थ्यमपोहितंक्वचित् २७

यथाहुः अर्थैकत्वादेकवाक्यंसापेक्षंचेद्विभागेस्यादिति ननु अर्थगौरवमित्यत्रकथंषष्ठीसमासः पूरणगुणेत्यादिनाप्रति-
षेधान्नैषदोषः येशुक्लादयःशब्दाःगुणेगुणिनिचवर्तंते यथापटस्यशुक्लंशुक्लःपटइतिच तेषामेवात्रनिषेधात् येचस-
दागुणमात्रवचनाःयथागौरवंप्राधान्यंरसोगंधस्पर्शइत्येवमादयस्तेषामनिषेधात् यथा तत्स्थैश्चगुणैःषष्ठीसमस्यतइ
तिवचनात् बहुलमभियुक्तप्रयोगदर्शनाच्च बलाकायाःशौक्ल्यमित्यादौतुभाष्यकारवचनादसमासः अतएवाहवाम ११
नः अत्रापीतिमादिषुगुणवचनसमासोबलीयान्स्यादिति २७

उपपत्तिरिति किंच बलात्स्वबलमाश्रित्यकर्मणिल्यप्लोपेपंचमीवक्तव्या उपपत्तिर्युक्तिरुदाहृता पराक्रमपक्षएवश्रेयानि
तियुक्तिरुक्तेत्यर्थः उचितंचैतन्महावीरस्येतिभावः तथा अनुमानेनयुक्त्या आगमःशास्त्रं नक्षतोनहतः किंत्वागमा
विरुद्धमेवोक्तं अन्यथातद्विरोधादनुमानस्यैवाप्रामाण्यप्रसंगादितिभावः ईदृक्इत्थंक्षात्रयुक्तमिदंवचनं अविद्य-

उपपत्तिरुदाहृताबलादनुमानेननचागमःक्षतः
इदमीदृगनीदृगाशयःप्रसभंवक्तुमुपक्रमेतकः २८

मानईदृक्इत्थंक्षात्रयुक्ताभिप्रायोयस्यसअनीदृगाशयः अभिप्रायश्छंदआशयइत्यमरः कःप्रसभंहठात्वक्तुंउपक्रमेत
नकोपीत्यर्थः इत्थंवक्तुमुपक्रमितैवनास्तिवक्तातुदूरापास्तएवेतिभावः केचिदेतच्छ्लोकत्रयंनिंदापरत्वेनापियोजयंति
तदसत् हितोपदेशमात्रनत्परस्यातिवत्सलस्यराज्ञोमत्सारिणइवमहावीरेष्वनारिविधेयेसर्वानर्थमूलभूतनिंदातात्पर्यकल्पनानौ
चित्यादिति २८

किरा॰टी॰ यदिसाधूक्तंतर्हितथैवक्रियतामित्याशंक्याह अविविक्ततयेति तथापित्वयासम्यक् निर्णीतेपिमेहृदयमविविक्ततया असंतु सर्ग
१२ ष्टतयाअद्यापिसंशयगतत्वेनेत्यर्थः निर्णयमेवधावत्यनुसरति अपेक्षतइतियावत् अद्यापिनिर्णयस्य अनुदयादिति २
भावः निर्णयानुदयेहेतुमाह अवेति विधेयेषुसंधिविग्रहादिकर्तव्यार्थेषुयाविशेषसंपदः अवांतरभेदसमृद्धिबाहु

अविविक्ततयातथापिमेहृदयंनिर्णयमेवधावति
अवसाययितुंक्षमाःसुखंनविधेयेषुविशेषसंपदः२९

ल्यानि ताःसुखमक्लेशेनावसाययितुंपुरुषान्प्रत्यानुकूल्येनस्वस्वरूपंस्वयमेवशीघ्रंप्रत्याययितुमित्यर्थः स्यतेर्ण्यंताद्
पिकर्मकर्तृत्वात्तुमुन्क्षमंतइति क्षमाःशक्तानभवंति क्षमंशक्तेहितेत्रिष्वित्यमरः विधेयमात्रस्यसुगमत्वेपितद्विशेषा
णांसौक्ष्म्यात् बाहुल्याच्चदुर्ज्ञेयत्वादद्यापिनिर्णयाकांक्षेतितात्पर्यार्थः अत्रनिर्णयधावनंप्रत्युत्तरवाक्यार्थस्यहेतुत्वा १२
भिधानात् वाक्यार्थहेतुकंकाव्यलिंगमलंकारः तदुक्तं हेतोर्वाक्यपदार्थत्वेकाव्यलिंगमुदाहृतमिति २९

वस्तुविशेषावधारणमंतरेणैवप्रवृत्तिरित्याशंक्याह सहसेति क्रियतइतिक्रियाकार्यंसहसा।अविमृश्येत्यर्थः सहसेत्योका क्षिकाविमर्शयोरितिगणव्याख्यानेस्वरादिपाठादव्ययं नविदधीतनकुर्यात् कुतअविवेकः।अविमृश्यकारित्वंपरमस्यंतमा पदांपदंस्थानंविपत्तिकारणमित्यर्थः व्यतिरेकेणोक्तमर्थमन्वयेनाह वृणतइतिगुणलुब्धागुणगृध्नागुणग्रभवइतिस्वयं-

सहसाविदधीतनक्रियामविवेकः परमापदांपदं
वृणतेहिविमृश्यकारिणंगुणलुब्धास्स्वयमेवसंपदः ३०

वरणहेतूक्तिः संपदश्श्रियः विमृश्यकरोतीतिविमृश्यकारीउपपदमतिङितिसमासः तंस्वयमेववृणतेभजंते वृङ् संभक्ता- वितिधातुः तस्माद्विमृश्यैवप्रवर्त्तितव्यमित्यर्थः अत्रसहसाविधाननिषेधलब्धविमृश्यकारित्वरूपकारणस्यापदुपव्यति रेककार्येणसमर्थनाद्वैधर्म्येणार्थांतरन्यासः द्वितीयार्द्धेनत्वसएवसाधर्म्येणेतिज्ञेयं ३० ✿ ✿

ननुसाहसिकस्यापिफलसिद्धिर्दृश्यतएवतत्किंविवेकेनेत्यत्राह अभीति यःपुमान् विधीयंतइतिविधयःकृत्यवस्तूनिवी
जानीवेत्युपमितसमासः शरदंलोकइवेति वाक्यगतोपमानुसारात् तानिविधिबीजानिविवेकोवारीवविवेकवारितेनवि
वेकवारिणापूर्ववत्समासः अनुपालयन्प्रतीक्षमाणःसंरक्षन्वा अभिवर्षतिसिंचति सपुमान् फलंसाधननिष्पाद्यो

अभिवर्षतियोनुपालयन्विधिबीजानिविवेकवारिणा
ससदाफलशालिनींक्रियांशरदंलोकइवाधितिष्ठति ३१

र्थःसस्यंच फलंहेतुकृतेसस्यइत्युभयत्राप्यमरः तच्छालिनींक्रियांकर्म लोकोजनः लोकस्तुभुवनेजनइत्यमरः शरदमिव
सदाधितिष्ठति सदाक्रियाफलंप्राप्नोत्येव नकदाचिद्व्यभिचरतीत्यर्थः साहसिकस्यकाकतालीयासिद्धिःविवेकिनस्तुनिय १३
तेतिभावः अत्रफलशब्देनसस्यहेतुकृतयोरर्थयोरभेदाध्यवसायात् श्लेषमूलातिशयोक्तिः तदनुगृहीताचोपमेत्यनुसंधेयं ३१

नियतार्विवेकिनः फलसिद्धिरित्युक्तं संप्रतितामेवरूच्यर्थस्तौति श्रुचीति श्रुचिसंप्रदायशुद्धं श्रुतंशास्त्रश्रवणं कर्तृ वपुर्भूषयति अन्यथा अविद्वान्पुरुषः शोच्यइतिभावः तस्यश्रुतस्य प्रशमःक्रोधोपशांतिः अलंक्रिया भूषणंभवति अन्यथाश्रुतिर्वैफल्यादितिभावः पराक्रमः सत्यमत्सरेशौर्यं प्रशमस्याभरणंभवति अन्यथासर्वैः परिभूयतइतिभावः सपराक्रमः नया-

श्रुचिभूषयतिश्रुतंवपुःप्रशमस्तस्यभवत्यलंक्रिया
प्रशमाभरणंपराक्रमःसनयापादितसिद्धिभूषणः३२

पादितानीतिसंपादितविवेकपूर्विकेतियावत् साचासौसिद्धिश्च सैवभूषणंयस्यसतथोक्तः अन्यथासाहसिकस्यसिद्धेः काकतालीयत्वेन पक्षेपराक्रमवैयर्थ्यादितिभावः वपुषोभूष्यत्वेवात्रसिद्धेर्भूषणत्वेवतु उभयंमध्यमानांतुल्यत्वात्पूर्वोत्तरपक्षयोरितिविवेकः एवंविशिष्टसिद्धेरनन्यभूषितायाएवभूषणत्वोक्त्या सर्वाभरणत्वयास्तुतिर्गम्यते अत्रोत्तरोत्तरस्यपूर्वपूर्वविशेषणत्वात् एकावल्यलंकारः तदुक्तं यत्रविशेषणभावं पूर्वपूर्वंप्रतिक्रमेणैव भजतिपरंपरमेवासंह्लतिरेकावलीकथितेति

विमृश्यकुर्यादितिस्थिरं तत्रविमर्शोपायः कइत्युक्तेशास्त्रमेवेत्याह मतीति मतिभेदः कार्यविप्रतिपत्तिः मतिभेदस्तमइवेत्यु पमितसमासः दीपइवेत्युपमानानुसारात्तेनतिरोहितेऽतएवगहनेदुरवगाहे कृत्यविधौ कार्यानुष्ठानेविवेकिनांसुकृतः स्वभ्य स्तः अतएवपरिशुद्धोनिश्चितोन्यत्रसुविहितः प्रवातादिदोषरहितः आगमःशास्त्रं आगमःशास्त्रमाम्नायइतिविश्वः दीपइवार्थदर्शनं कार्यज्ञानंवस्तुप्रतिभासनंचकुरुते ३३ एवंविमृश्यकुर्वतोदैवादर्थनाशेपिनकश्चित्पराधइत्याह स्पृहणीयेति स्पृहणीय

मतिभेदतमास्तिरोहितेगहनेकृत्यविधौविवेकिनां सुकृतःपरिशुद्ध-
आगमःकुरुतेदीपइवार्थदर्शनं ३३ स्पृहणीयगुणैर्महात्मभिश्चरिते
वर्त्मनियच्छतांमनः विधिहेतुरहेतुरागसांविनिपातोपिसमःसमुन्नतेः ३४

गुणैर्लोकश्लाघ्यगुणैर्महात्मभिःसज्जनैः चरितेअनुष्ठितेवर्त्मनिआचारेमनोयच्छतांनिदधतां सन्मार्गेणव्यवहरतामित्य र्थः विधिहेतुर्दैवनिमित्तकः विधिर्विधानेदैवेचेत्यमरः अतएवागसां अपराधानामहेतुः विनिपातोपिदैविकानर्थोपि विनिपातोवपातेस्याद्दैवाद्व्यसनेपिचेतिविश्वः समुन्नतेर्वृद्धेःसमःतुल्यः दैविकेपुरुषस्यानुपालभ्यत्वादितिभावः यथाहकामंदकः यत्नुसम्यगुपक्रांतंकार्यमेतिविपर्ययं पुमांस्तत्रानुपालभ्योदैवांतरितपौरुषइति ३४ ७ १५

संप्रतियद्विमृश्यंतदाह शिवमिति जिगीषवोजयेच्छवोनृपाः विजितक्रोधरयाः विजितक्रोधवेगाः संतोगरीयसींमभ्रू -
तां अदूषितायतिं आक्षतोत्तरकालांस्वंतामित्यर्थः फलनिष्पत्तिंफलसिद्धिं विगणय्यफलवत्वंनिश्चित्येत्यर्थः पौरुषंपु-
रुषकारंशिवमनुकूलं औपयिकंउपायं विनयादित्वात्स्वार्थेठक् उपायात्हस्वत्वंच नयंतिमापयंति पौरुषमुपायेन
च जयंतीत्यर्थः नानिश्चितफलंकर्मकुर्वीतेतिभावः यथाहकामंदकः निःफलंक्लेशबहुलंसंदिग्धफलमेवच नकर्मकुर्या

शिवमौपयिकंगरीयसींफलनिष्पत्तिमदूषितायतिं विगणय्यनयंतिपौरुषंविजितक्रोधरयाजिगीषवः ३५
अपनेयमुदेतुमिच्छतातिमिरंरोषमयंधियापुरः अविभिद्यनिशाकृतंतमःप्रभयानांशुमताप्युदीयते ३६

न्मतिमान्सदावैरानुबंधिचेति नयतिःप्रापणार्थेद्विकर्मकः अत्रपौरुषस्यकर्तृस्थकर्मत्वेप्युपायस्यानथात्वात्क्रोधंविनयतइत्या
दिवत् कर्तृस्थेचाशरीरेकर्मणीत्यात्मनेपदंनभवति ३५ यदुक्तंविजितक्रोधरयाइति तदावश्यकत्वमाह अपनेयमिति उदेतुंअ
भ्युदेतुंइच्छतापुरुषेणपुरःप्रथमं रोषमयंरोषादागतं मयट्इति मयट् तिमिरमज्ञानं धियाबुध्या करणेनापनेयं अपनोद्यं
तथाहि अंशुमतापिकर्त्राप्रभयातेजसाकरणेननिशाकृतंतमोध्वांतमविभिद्यनोदीयते किंतुविभिद्यैवेत्यर्थः सूर्यस्या-
प्येवंकिमुतान्येषामित्यपिशब्दार्थः इणोभावेलट् ३६ ७ ७

ननुदुर्बलस्यैवमस्तुबलीयसस्तुक्रोधादेवकार्यसिद्धिरित्यत आह बलवानिति बलवानशूरोपि यःकोपाज्जन्मयस्यतस्य-
कोपजन्मनः अवर्ज्योबहुव्रीहिर्व्यधिकरणोजन्माद्युत्तरपद इतिवामनः तमसोमोहस्य कृद्योगात्कर्मणिषष्ठी अभिभव
माक्रांतिंनरुणद्धि सन्नृपः क्षयस्यपक्षः क्षयपक्षः कृष्णापक्षः ऐंदवीः इंदुसंबंधिनीःकलाइव कलातुषोडशोभागइत्यमरः
सकलाःशक्तिसंपदःप्रभुमंत्रोत्साहशक्तीः हंतिनाशयति अंधस्यजंघाबलमिवक्रोधांधस्यलोकोत्तरमपिसामर्थ्यंव्य-

बलवानपिकोपजन्मनस्तमसोनाभिभवंरुणद्धियः क्षयपक्षइवैंदवीःकलाःसकलाहंतिसशक्तिसंपदः ३७
समवृत्तिरुपैतिमार्दवंसमयेयश्चतनोतितिग्मतां अधितिष्ठतिलोकमोजसासविवस्वानिवमेदिनीपतिः ३८

र्थमेवेत्यर्थः अत्र कालस्यसर्वकरणत्वात् क्षयपक्षस्यकलाक्षयकारित्वमस्त्वेवतमसस्तुतत्कालविजृंभणात्तथाव्यप
देशः ३७ विमृश्यकुर्वतःक्रियाप्रकारमाह समेति यःसमानातिमृदुर्नत्वति तिग्मावृत्तिर्यस्यससमवृत्तिः सन् समयेस
त्यवसरे मार्दवंमृदुवृत्तित्वमुपैति तिग्मतांतीक्ष्णवृत्तित्वंचतनोतिसमेदिनीपतिर्विवस्वानिव ओजसा तेजसालोकम १५
धितिष्ठति आक्रमति सूर्योपिऋतुभेदेनप्रातःकालादिनाचसमवृत्तिरित्यादिनायोज्यं ३८ ॐ ॐ

उक्तान्यथाकरणेअनिष्टमाह क्वेति श्रियांसंपदांचिरायबहुकालंपरिग्रहःस्वायत्तीकरणंक्व इंद्रियाणिवाजिनइवेत्युपमितंस
मासः दुष्टानांअमार्गधाविनांइंद्रियवाजिनांवश्योवशंगतस्तस्यभावस्तत्ताक्वनोभयमेकत्रातिष्ठतीत्यर्थः कुतः हियस्मात्-
शरदभ्रवच्चलाश्चंचलाः किंचबहुच्छलाःबहुव्याजाः बहुरंध्राइतियावत् छलंतुस्खलितेव्याजइतिविश्वः श्रियः-
लक्ष्म्यः चलेंद्रियैरजितेंद्रियैरित्यर्थः असकरक्ष्यारक्षितुमशक्याः कथंचित्प्राप्ताअपिश्रियोनाविनीतेषुतिष्ठंतीत्य

क्वचिरायपरिग्रहश्श्रियांक्वचदुष्टेंद्रियवाजिवश्यता शरदभ्रचलाश्चलेंद्रियैरसुरक्ष्याहिबहुच्छलाःश्रियः ३९
किमसामयिकंवितन्वतामनसःक्षोभमुपात्तरंहसः क्रियतेपतिरुच्चकैरपांभवताधीरतयाधरीकृतः ४०

र्थः वाक्यार्थहेतुकंकाव्यलिंगमलंकारः ३९ क्रोधस्यदुष्टतामुक्त्वातस्यत्यागमुपदिशति किमिति उपात्तरंहसःप्राप्तत्वरस्य मन
सः समयोस्यप्राप्तःसामयिकः समयस्तदस्यप्राप्तमितिठक् सनभवतीत्यसामयिकमप्राप्तकालंक्षोभंवितन्वताभवता धीरत
याधैर्यगुणेन मनसोनिर्विकारत्वंधैर्यं सत्स्वपिहेतुष्वितिरसिकाः अधरीकृतः तिरस्कृतः प्रागितिशेषः अपांपतिरपिकिंकिमर्थंसु
च्चकैरधिकःक्रियते नपराजितंपुनरुच्चकैःदुर्यादितिभावः अत्रवितन्वतेतिभीमविशेषणत्वेन पदार्थस्योच्चैः करणेहतुत्वात्काव्यलिंगम
लंकारः ४०

क्रोधे समुद्र पतिनि तो
तुमारा धीरगुण कर्के
ताड़ स्कार करफेगया
और अब गर्ज के क्या कर सकता है

श्रुतमिति किंच येश्श्रुतंशास्त्रमधिगम्यापि शरीरजन्मनःशरीरप्रभवान् रिपून् कामक्रोधलोभमोहमत्सरादीन् विनयंतेननि
यच्छंति कर्तृस्थेचाशरीरेकर्मणीत्यात्मनेपदं तेखल्वचिरस्यझटितिसंपदांश्रियांचापलाश्रयमस्थैर्यनिबंधनमयशः दु
ष्कीर्तिंजनयंति आश्रयदोषादस्थैर्यंसंपदांनस्वदोषादित्यर्थः अजितारिषड्वर्गस्यकुतःसंपदइतिभावः ४१ तथापि

श्रुतमप्यधिगम्ययेरिपून्विनयंतेनशरीरजन्मनः जनयंत्यचिरायसंपदामयशस्तेखलुचापलाश्रयम् ४१
अतिपातितकालसाधनास्वशरीरेंद्रियवर्गतापनी जनवन्नभवंतमक्षमानयसिद्धेरपनेतुमर्हति ४२

क्रोधात्कार्यहानिरित्याशयेनाह अतिपातितेति अतिपातितान्यतिक्रांतानि कालःसमयः साधनानिसहायादीनिचययासा
तथोक्तातापयतीतितापनी कर्तरिल्युट्टिड्ढाणञिति ङीप् स्वस्ययच्छरीरमिंद्रियवर्गश्चतयोस्तापनी अक्षमाक्रोधोभवंतंज
नवत् पृथग्जनमिव तेनतुल्यमितिवतिप्रत्ययः तेनेवार्थोलक्ष्यते तद्धितश्चासर्वविभक्तिरित्यव्ययत्वम् नयसिद्धेः
नयसाध्यफलादपनेतुंपृथक्कर्तुंनार्हति असमयक्रोधस्यात्मसंतापातिरिक्तंफलंनास्तीत्यर्थः ४२ छ

द्विषः क्रोध इत्युक्तमथ क्षमाया गुणानाह उपकारकमिति आयते उत्तरकालस्य भृशमत्यंतमुपकारकं स्थिरफलहेतुरित्यर्थः भूरिणः प्रभूतस्य कर्मफलस्य प्रसूयते ऽनेनेति प्रसवः कारणं अपायिन भवतीत्यनपायि स्वयमविनश्यदेवा द्विषां निबर्हणं विनाशकं एवंगुणकं साधनं तितिक्षासमं क्षमातुल्यं नास्ति क्षांतिः क्षमा तितिक्षा चेत्यमरः तिज निशान इति धातोर्गुप्तिज्किद्भ्यः

उपकारकमायतेर्भृशं प्रसवः कर्मफलस्य भूरिणः
अनपायि निबर्हणं द्विषां न तितिक्षासममस्ति साधनं ४३

द्भ्यः सन्निति क्षमार्थे वर्तमानात् सन्प्रत्ययः तितिक्षासममित्यनुक्तोपमेया आर्थीस्तमामागाल्लुप्तोपमास्तु शमनपाथि शब्दैः साधनांतर वैलक्षण्यात् व्यतिरेकश्च व्यज्यते भेदप्राधान्ये उपमानादुपमेयस्याधिक्ये विपर्यये च व्यतिरेकालंकार इति तल्लक्षणात् ४३

ननुतितिक्षायाः कालक्षेपे दुर्योधनः सर्वान्राज्ञोवशीकुर्यादित्यत्राह प्रणतीति सहजस्नेहेनाकृत्रिमप्रेम्णानिबद्धचेतसो अ-
स्मास्वगाढंलग्नचित्ताः सुयोधनेतु नतथेतिभावः किंचमानभृतां अहंकारिणांप्रथमे अग्रेसराः सुयोधनस्तुनतथेति-
भावः वृष्णयोयादवाः प्रणतिप्रणवान् प्रणामपरान् सुयोधनस्तुनतथेतिभावः नोस्मान्विहायसुयोधनंसदानप्र-
णमंतिननमंति नअनुसरंति किंतुकार्यकालेत्यक्ष्यंतेवेत्यर्थः सतियादवानुकूल्येविग्रहेनकिंचिदस्माकमसाध्यंभवेदि

प्रणतिप्रवणान्विहायनः सहजप्रेमनिबद्धचेतसः प्रणमंतिसदासुयोधनंप्रथमेमानभृतांनवृष्णयः ४४
सुहृदः सहजास्तथेतरेमतमेषांनविलंघयंतिते विनयादिवयापयंतितेधृतराष्ट्रात्मजमात्मसिद्धये ४५

तिभावः अनेकपदार्थहेतुकंकाव्यलिंगमलंकारः ४४ किंचकारणांतरमाह सुहृदइति किंचैषांवृष्णीनांयेसहजाः सहजा-
ताः सहजामातृपितृपक्षाइत्यर्थः अन्येष्वपिदृश्यतइतिडप्रत्ययः सुहृदोमित्राणि तथाइतरेकृत्रिमसुहृदश्च एषांमतं-
वृष्णिपक्षंनविलंघयंति नातिक्रामंति तेहृद्येपिनृपाः दुर्योधनोपजीविनोपीतिभावः आत्मसिद्धये आत्मजीवनार्थं धृत
राष्ट्रात्मजंदुर्योधनंविनयादानुकूल्यादिवयापयंति कालंगमयंति कार्यकालेहिवृष्णिपक्षप्रवेशिनइत्यर्थः यातेर्ण्यंता- १७
त्पुक् अर्तिह्रीत्यादिनापुगागमः ४५

किंतुनायमभियोगकालइत्याशयेनाह अभियोगइति कृतावधेःपरिभाषितकालस्य अवधिस्त्ववसानेस्यात्सीम्निकालेब लेपिचेतिविश्वः तस्यसुयोधनस्य कर्मणिषष्ठी भवताकृतः अवश्यंतदितिशेषः अभियोगःआहवः अभिमानइतियावत् अभियोगस्तुशापथेस्यादाहवपराभवावितिविश्वः इमान्पूर्वोक्तान्महीभुजोहरिदश्वःउष्णरश्मिः कमलाकरानिव- समुत्पतन्नुद्यन्नेवप्रविघाटयिता भेत्स्यति घटेश्चौरादिकाल्लुट् भौवादिकस्यतुमितांह्रस्वइतिह्रस्वत्वंस्यात् ४६ अथ

अभियोगइमान्महीभुजोभवतानस्यकृतःकृतावधेः प्रविघाटयितासमुत्पतन्हरिदश्वःकमलाकरानिव ४६
उपजापसहान्विलंघयन्सविधातान्नृपतीन्मदोद्धतः सहतेनजनोप्यधःक्रियांकिमुलोकाधिकधामराजकं ४७

नयेवृष्णिपक्षास्तान्प्रत्याह उपजापेति मदोद्धतःसदुर्योधनोनृपतीनन्यान्नृपान्विलंघयन्मदादवमानयन्सहंतइतिसहाःपचाद्यच् उपजापस्यसहान्भेदयोग्यान् भेदोपजापावित्यमरः विधाताविधास्यति विपूर्वाद्दधातेर्लुट्स अमानितोजनः स्वभेद्यइतिभावः नचतेसहिष्णवइत्याह प्राकृतोपिजनःअधःक्रियामपमानं नसहतेलोकाधिकधामलोकोत्तरप्रतापं राजकंराजसमूहः गोत्रोक्षेत्यादिनावुञ्प्रत्ययः किमुसहतेनेपितुनेतिकिमुवक्तव्यमित्यर्थः तथाचकृत्स्नमेवराजमंडलमस्मानेवावलंबिष्यतेइतिभावः ४७

ननुसर्वीनिवेत्यादिवनेचरोक्त्यातस्यमदसंभावनापिकथमित्यत्राह असमापितेति असमापितकृत्यसंपदामकृतकृत्यानांद्रु
तः अभिमानशालिनामहंकारिणां विभूतयःसंपदएवतावतास्वल्पेनविनयेनकार्यवशादारोपितेनेतिशेषः हृतवेगंप्रति-
बद्धवेगं नतुस्वरूपतोहतंमदमुत्तंभयितुंवर्धयितुंप्रभवंति समर्थाभवंति सर्वथादुर्जनसंपदोविकारयंतीतिभावः ४८

असमापितकृत्यसंपदांहृतवेगंविनयेनतावता प्रभवंत्यभिमा
नशालिनांमदमुत्तंभयितुंविभूतयः ४८ मदमानसमुद्धतंनृपंन-
वियुंक्तेनियमेनमूढता अतिमूढउदस्यतेनयान्नयहीनादपरज्यतेजनः ४९

अथमदस्यानर्थहेतुतांयुग्मेनाह मदेति अपरागेतिन्च मदमानाभ्यांदर्पाहंकाराभ्यां समुद्धतंनृपंमूढताहंकारिताकार्याकार्या
परिज्ञानत्वंनियमेनावश्यंनवियुंक्तेनविमुंचति अतिमूढोनयान्नीतिमार्गादुदस्यते उत्क्षिप्यते कर्मकर्तरिलिट् नयहीना १८
ज्जनोलोकोपरज्यते॰ परक्तोभवति स्वरितत्वादात्मनेपदं ४९

कोर्य
अप्रगनी

अपरागेति अपरागोऽप्रीतिर्द्वेषइतियावत् समीरणइववनेनेरितश्चोदितः अतएवक्रमेणशीर्णाशीर्णाच्छिन्ना अकुल्याचल्याच मूलसंततिः मन्नृत्यादिस्वजनवर्गः शिफासंघातश्चयस्यसतथोक्तः मूलंवशीकृतेस्त्रीयेशिफातारांतिकादिष्विति वैजयंती

अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसंततिः
सुकरस्तरुवत्सहिष्णुनारिपुरुन्मूलयितुंमहानपि ५०

रिपुर्महानपितरुवद्वृक्षइवसहिष्णुनाक्षमावताउन्मूलयितुमुद्धर्तुंसुकरः सुसाध्यः सुसुकरोन्मूलनइत्यर्थः अत्रमदादेः पूर्वपूर्वस्योत्तरोत्तरंप्रतिकारणत्वात् कारणमालातरुवदित्युपमाचेतिद्वयोः संसृष्टिः ५० ७ ७

नन्वंतर्भेदमात्रेणकथंस्फसाध्यस्तत्राह अणुरिति अणुरल्पोप्यंतःप्रकृतिप्रकोपजोंतरंगामात्यादिप्रपरागसमुत्थः प्रकृतिः पंच भूतेषुस्वभावेमूलकारणे छंदःकारणगुल्मेषुजंत्वमात्यादिकेष्वमीतिवैजयंती विग्रहोवैरंप्रभुमुपहंतिनाशयति अत्रदृष्टांतमाह तरुशाखांतानांनिघर्षोघर्षणं तज्जोऽनलोग्निः भूधरंगिरिमखिलंसाकल्येन हिनस्तिदहतीत्यर्थः अत्रोप-

अणुरप्युपहंतिविग्रहःप्रभुमंतःप्रकृतिप्रकोपजः अखिलंहिहिनस्तिभू
धरंतरुशाखांतनिघर्षजोनलः ५१ मतिमान्विनयप्रमाथिनःसमुपेक्षेत
समुन्नतिंद्विषः स्फजयःखलुनादृगंतरेविपदंताह्यविनीतसंपदः ५२

मानोपमेयस्समानधर्माणांबिंबप्रतिबिंबतयानिर्देशेनदृष्टांतालंकारः ५१ तथापिकथंवर्धमानंशत्रुमुपेक्षेतइत्याशंक्यदुर्विनीतत्वादित्याह मतिमानिति मतिमान्प्राज्ञोविनयंप्रमथ्नातित्यजतीतितस्यविनयप्रमाथिनोदुर्विनीतस्यद्विषः समुन्नतिंवृद्धिमुपेक्षेत उपेक्षायाःफलमाह तादृगविनीत अंतरेकचिद्रंध्रेस्फजयः स्फखेनजेतुंशक्यः खलुहियस्मादविनीतसंपदःविपदंताः अनर्थोदर्काः ५२ १९

कथंदुर्विनितस्यशत्रोःस्रजयत्वमित्याशंक्यभेदजर्जरितत्वादित्याह लघ्विति लघुवृत्तितयास्वस्यदुर्वृत्तरूपतयाबहिर्मित्रादि
षुजनपदेषुअंतरमात्यादिषुचभिदांभेदंगतं भिदिद्रादिभ्योङित्यङ्प्रत्ययः नृपस्यमंडलंराष्ट्रमनंतरःसन्निहितोजिगीषु
रापगारयोनदीवेगः शिथिलमंतर्भेदजर्जरं कूलमिवाभिभूयाक्रम्यहरतिस्वाधीनंकरोति ५३ अन्विति इतीत्थंआकु

लघुवृत्तितयाभिदांगतंबहिरंतश्चनृपस्यमंडलं अभिभूयहरत्यनंतरःशि
थिलंकूलमिवापगारयः ५३ अनुशासतमित्यनाकुलंनयवर्त्माकुलमर्जु
नाग्रजं स्वयमर्थइवाभिवांछितस्तमभीयायपराशरात्मजः ५४

लंअरिनिकारस्मरणात्क्षुभितं अर्जुनाग्रजंभीमसेनं नयवर्त्मनीतिमार्गमनाकुलमसंकीर्णं यथास्यात्तथा अनुशासनंउप
दिशंतंजक्षित्यादयःषडित्यभ्यस्तान्नुमभावः तंयुधिष्ठिरंपराशरात्मजोवेदव्यासः स्वयमभिवांछितोर्थइवसाक्षान्मनो
रथइवेत्युत्प्रेक्षाअभीयायप्रापः ५४ ७ ७ ७

अथयुग्मेनाह मधुरैरिति मधुरैः शांतैर्निरीक्षितैरवलोकनैः नपुंसकेभावेक्तः नविद्यतेवशंआयत्तत्वं येषांतानि अवशानिप्रतिकूलानि वशाआयत्ततायांचेतिविश्वः तिर्यंचिमृगपक्ष्यादीनि शमंशांतिं लंभयन्प्रापयन् लभेर्म्श्चेतिनुमागमः गत्यर्थेत्यादिनाद्विक



मधुरैरवशानिलंभयन्नपितिर्यंचिशमान्निरीक्षितैः
परितःपटुबिभ्रदेनसांदहनंधामविलोकनक्षमं ५५
सहसोपगतःसविस्मयंतपसांसूतिरसूतिरापदां
ददृशेजगतीभुजामुनिःसवपुष्मानिवपुण्यसंचयः ५६

र्मकत्वं परितःपटूज्ज्वलंएनसांदद्यतेनेनेतिदहनंनिवर्तकंनथापिविलोकनक्षमंदर्शनीयं वह्न्यादिविलक्षणमितिभावः धामतेजोबिभ्रत् ५५ सहसेति पुनःसहसोपगतः अकस्मादागतः तपसांसूतिःप्रभवः आपदांअसूतिः अप्रभवः निवर्तकइतियावत् समुनिर्व्यासः वपुष्मान्देहधारीपुण्यसंचयः पुण्यराशिरिवेत्युत्प्रेक्षाजगतीभुजाराज्ञासविस्मयंददृशेदृष्टः ५६

अथेति अथदर्शनानंतरं उच्चैकैरुन्नतात्पराध्यांच्छ्रेष्ठात् अर्ध्याच्चपरावराधमोत्तमपूर्वाच्चेतियत्प्रत्ययः आसनतः सिंहासना
दुद्यन्नुत्तिष्ठन् अतएवधूतानिकंपितान्यरुणानिवल्कलाग्राणियस्यसतथोक्तः सनृपः कीर्णविस्तृतमाकपिशमंशुजालंय-
स्यसतथोक्तः शुमेरोः शृंगादुद्यन्तिग्मरश्मिरिवरराज ५७ अवहितेति सनरेंद्रोऽवहितहृदयोऽप्रमत्तचित्तःसन् चित्तं

अथोच्चकैरासनतः पराध्यादुद्यन्सधूतारुणवल्कलाग्रः रराजकीर्णाकपिशांशु
जालः शृंगात्सुमेरोरिवतिग्मरश्मिः ५७ अवहिततहृदयोविधायसोर्हामृषिव
दृषिप्रवरेगुरूपदिष्टां तदनुमतमलंचकारपश्चात्प्रशामइवश्रुतमासनंनरेंद्रः ५८

तुचेतोहृदयंस्वांतं हृन्मानसंमनइत्यमरः ऋषिप्रवरेमुनिश्रेष्ठे ऋषिवदृष्यर्हां अर्हत्यर्थेवतिप्रत्ययः गुरूपदिष्टांशास्त्रीया
मित्यर्थः अर्हांपूजां गुरोश्चहलइत्यकारप्रत्ययः विधायपश्चादनंतरंतदनुमतंतेनानुज्ञातमासनंप्रशमः शांतिः श्रुतंशास्त्र
श्रवणमिवालंचकार उक्तंचपूर्वं प्रशमस्तस्यप्रभवत्यलंक्रियेति मुन्याज्ञयोपविष्टवानित्यर्थः ५८ ❀ ❀

व्यक्तेति व्यक्तोदितैः स्पष्टोद्गतैः स्मितमयूखैर्विभासितावोष्ठौयस्यसतथोक्तः विकीर्णधाम्नोविस्तृततेजसोमुनेरभिमुखंवंति
ष्ठन् सन्नृपः इन्दुंसमृद्धंदीप्तमितियावत् अंशुजालंतन्वंतंगुरुंगीष्पतिं गुरुगीष्पतिपित्राद्याविल्यमरः अभितः परि



व्यक्तोदितस्मितमयूखविभासितोष्ठस्तिष्ठन्मुनेरभिमुखंसविकीर्णधाम्नः तन्वंतमि
न्दुमभितोगुरुमंशुजालंलक्ष्मीमुवाहसकलस्यशशांकमूर्तेः ५९ श्रीराम
इतिश्रीभारविकृतौकिरातार्जुनीयेमहाकाव्येद्वितीयःसर्गःसमाप्तः शुभंभव०

तइत्यादिनाद्वितीया अभितोअभिमुखंतिष्ठनइतिशेषः सकलस्यसंपूर्णस्यशशांकामूर्तिर्यस्यतस्येंदोर्लक्ष्मीमुवाहवहतिस्म
अत्रोपमेयस्यराज्ञउपमानेंदुधर्मेणलक्ष्म्याः साक्षात्संबंधासंभवात्तत्सदृशींलक्ष्मीमितिप्रतिबिंबकरणाक्षेपादसंभवद्वस्तु २१
संबंधात् पदार्थवृत्तिर्निदर्शनालंकारः तदुक्तंप्रतिबिंबस्यकरणंसंभवतियत्रवस्तुयोगेन गम्येनासंभवतानिदर्शनाद्विधा-

भिमतेति ५९ इतिश्रीमहोपाध्यायमल्लिनाथसूरिविरचितायांकिरातार्जुनीयव्याख्यायांघंटापथसमाख्यायांद्वि-
तीयःसर्गःसमाप्तः शुभंभवतु शाके १७८३ दुर्मतिनामसंवत्सरेज्येष्ठेमासिकृष्णपक्षेद्वादश्यामिदंसमाप्तं

इतिकिरातार्जुनीयेकाव्येद्वितीयःसर्गःसमाप्तः

